# गुरुकुल-पत्रिका

श्रावणमासः २०२५
जुलाई-अगस्त १९६८
पूर्णांकः २४०

व्यवस्थापकः
श्री पं० प्रियव्रतो वेदवाचस्पतिः
उपकुलपतिः
गुरुकुल कांगड़ी विश्वविद्यालयः

सम्पादकः—श्री भगवद्दत्तो वेदालंकारः
उपसम्पादकः—श्री प्रो० बुद्धदेव एम. ए.



वार्षिकशुल्कम्
देशे ४), विदेशे ६)

मूल्यं
४० पैसे

# गुरुकुल-पत्रिका

श्रावणमास २०२५

जुलाई अगस्त १९६८

पूर्णांक २४०

व्यवस्थापक

श्री प० प्रियव्रतो वेदवाचस्पति

उपकुलपति

गुरुकुल कांगड़ी विश्वविद्यालय

ओ३म्


# गुरुकुल-पत्रिका

[ गुरुकुल कांगड़ी विश्वविद्यालयस्य मासिक पत्रिका ]

श्रावण २०२५, जुलाई-अगस्त १९६८, वर्षम् २०, अङ्क १२, पूर्णाङ्क २४०


## श्रुति-सुधा

(ऋषि – मेधातिथि काण्व । देवता – ऋभव । छन्द – गायत्री)

अधारयन्त वह्नयोऽभजन्त सुकृत्यया ।
भागं देवेषु यज्ञियम् ॥ ऋ० १।२०।८

( वह्नय ) ऋत का वहन करने वाली ये ज्ञानरश्मियां ( सुकृत्यया ) उत्तम कृतियो व रचनाओ से ( देवेषु ) मस्तिष्क मे विद्यमान देवों के ( यज्ञियम् ) यज्ञ भाग को ( अधारयन्त ) धारण कराती है और ( अभजन्त ) प्रत्येक के हविभाग व कार्य-विभाग को विभक्त करती है।

***

# दाम्भिकः

( ले० विद्याभूषणः श्रीगणेशरामशर्मा, डूंगरपुरम् ( राज० ) )

पञ्चकेशीं दधानः, शिरसि निबद्धजटाजूटस्तदुपरि संहतिवलितं कौशेयं स्थूलाकारमुष्णीषं, भालपट्टे भस्मरेखात्रितयोपरि सुविशाल केशरचर्चितं सुविशालं त्रिपुण्ड्रं, तन्मध्ये कुङ्कुमाक्तो गोलाकारः तिलकः, कज्जलरेखालाञ्छिते दीर्घापाङ्गे लोचने, सघने भ्रुवौ, नेत्रयोर्द्वयोर्मध्ये भ्रकुट्यां श्यामो लघुस्तिलकः, कर्णयोर्द्वयोः स्वर्णरचिते लुलत्प्रवाले गोलाकारे कुण्डले, तयोरधोभागे लम्बमानौ द्वौ स्थूलस्थूलौ रुद्राक्षौ, भ्रुवोरुपर्यधश्च भस्मरेखाचिह्ने, गले रुद्राक्षतुलसीस्फटिकमालानामनेकाः पङ्क्तयस्ताभिः सह लम्बमाना मौक्तिकानां माला, स्वर्णसूत्रं च, कायाच्छादनाय परिधृतं स्थूलवस्त्रस्य बृहत्कञ्चुकं, कटिभागे धौतवस्त्रमतीव स्वच्छं, कूर्पयो रक्तवर्णस्य वस्त्रस्य पताकानिभे स्फुरन्त्यौ द्वे हस्तप्रमाणं लम्बमाने पट्टिके, स्कन्धयोर्द्वयोर्लम्बमानमुन्मुक्तमुत्तरीयं वस्त्रं, पादयोर्ग्रामीणचर्मकारेण निर्मिते चञ्चूसहितोपानहौ, वामहस्ते सपर्वा वंशयष्टिकेति काकाकृष्णलालमहाशयस्य वेषभूषाडम्बरो महान् विलसन्नास्ते। तस्य प्रथमदर्शन एव दर्शकानां हृदि तत्सिद्धाचार्यत्वोद्घोषकम् महातान्त्रिकत्वमिव किमपि मनोवाचामगोचरं प्रभावं महान्तं प्रसह्योत्पादयति। रक्ताभे तस्य नेत्रे प्रज्वलत्खदिराङ्गारज्योतिरिवोपहृतस्तेजो दर्शकानाम्।

सोऽय काकाकृष्णलालमहाशयः सर्वतो हि पर्वतावलिसङ्कुलायां भूमौ किलैकस्मिन् ग्रामे भिल्लप्रायायां वसतौ निवसन्नास्ते। यद्यपि स स्वात्मानं ब्राह्मणतनुजन्मानं कुलीनमुच्चवर्णं घोषयति तथापि स्वाकृतिप्रकृतिस्वभावचेष्टासम्भाषणैः सर्वथैव ग्रामीणो भिल्लजन इव प्रतिभाति स्वस्य जीवनक्रमे। शिक्षादीक्षासंस्काराचारव्यवहारैस्तु स निरक्षरभट्टाचार्य एवास्ते परन्तु वसतौ तस्यां सर्वसाधारणजनापेक्षया स बाह्याकारे कश्चनाधीतसर्वशास्त्रः प्रौढानुभवज्ञानसम्पन्नो व्युत्पन्नो महापण्डित इव तेजस्वीव दरीदृश्यते। तस्य भौतिकी देहसङ्घटना तावदतीव शक्तिसम्पत्सम्पन्ना प्रभावशालिनी च वर्तते खलु। तस्य शरीरविग्रहः कार्ष्णायसनिर्मितः स्थूलस्थूलोऽपि दीर्घः सुदृढः सबलः सक्षमोऽक्षुण्णसर्वावयवश्च विद्यते। यजमानैर्ग्रामवासिभिर्वणिक्ठक्कुरप्रभृतिभिः प्रदत्तायां प्रायेण पञ्चदशक्षेत्रविस्तृतायां ग्राम्यभूमौ सः कृषिकर्माचरति, तेनैव च कर्मयोगेन स निर्वाहसक्षमं धनधान्यादिपदार्थाननायासमेवोपलभते। स पुनस्तत्र भिल्लजनानां वसतिवृत्ते पञ्चविंशतिप्रायेषु ग्रामेष्वेकल एव द्विजन्मेति यजमानवृत्तिकार्याणि पौरोहित्येन समनोयोगं संसाधयन्नास्ते। स हि लोकेषु सिद्धपुरुष इव सर्वज्ञत्वमात्मनः प्रथते, निर्विघ्नं च पूज्यते सर्वलोकैः। ज्योतिर्विस्त्वेन च स स्वप्रदेशे सर्वग्रामनिवासिनां सद्गृहस्थजनानां मुहूर्तादिकं ज्योतिषसम्बन्धि कार्यजातमपि तत्परतया सम्पादयति। स हि कर्मकाण्डक्रियाकलापानपि च साधयति। क्वचिद्देवपूजाविधिं, क्वचिद्गृहवास्तुविधानं, क्वचिद्ग्रहशांतिं, क्वचिज्जपकार्याणि, क्वचिद्रुद्राभिषेकं, क्वचिद्दुर्गाचण्डीपाठपारायणानि, क्वचिद्भैरवहनूमद्विष्णुपाठपूर्वकं देवाराधनपूजां च करोति। क्वचिच्च स भूतप्रेतपिशाचवैतालादीनां पीडोपद्रवोपशमाय महामान्त्रिकत्वेन सर्वतन्त्रस्वतन्त्रमात्मतन्त्रं विस्तार्य चिकित्सते जनान्। न केवलमेतावदेवापितु दुःस्वप्नाशुभशकुननिवारणार्थमपि कांश्चनोपायानुपदिशति जनेभ्यस्तत्र-

स्येभ्यः । चौरा लुण्टाकावयोऽपि च तमेत काकाकृष्णलालमहाशयं कर्मस्वेवंविधेषु विश्वस्यं रहस्यगोप्तारं मन्यन्ते । स हि क्वचित् समूल्यं क्वचिन् निर्मूल्य चापि लोकेभ्य औषधादिक प्रदाय तांश्चिकित्सते । प्रासङ्काल स पशूनामपि चिकित्सा विधत्ते । ग्रामीणानां लोकाना पारस्परिकवैमनस्यकलहाभियोगेषु स पञ्चपरमेश्वरेष्वेको मुख्यः सदस्यः परिगण्यते, तथाविधेषु प्रकरणेषु स ग्रामीणजनानां पञ्चायतन विरच्य प्रामुख्येन तत्र भागं गृह्णन् मध्यस्थ. सन् सन्धिविग्रहादिकमपि च कारयति । सत्यावश्यके स न्यायालयान् गत्वा यथार्थं व्यर्थं वा कूटमाश्रित्य न्‌ चापि स्वसुविधानुसार करोति । स्वस्य निर्वाहयोग्यादवशिष्टं धान्य दधि दुग्धं घृत चापि विक्रीणीते लाभांशं च मूल्यरूप गृह्णीते । यदा कदा गोवृषभमहिषाश्वादीनां क्रयविक्रय च करोति । वाग्दानविवाहसस्कारधनर्णादानप्रदानव्यवहारेष्वपि लोकाना काकामहाशयो माध्यस्थ्यमत्र लभते । इत्थं काकामहाशयस्य व्यक्तित्व जनजीवने स्वक्षेत्रेऽनिवार्यतया सम्पूज्यते । एवं नानोपायः कर्मकलापैः काकाकृष्णलालमहोदयो बहुधनमर्जयति, सामाजिकीं प्रतिष्ठां चोपभुङ्क्ते ।

काकामहाशयस्य गृहे प्रकोष्ठान्तर्भागे बृहदाकारमेक देवपूजास्थानं प्रकल्पितमास्ते । तत्रैकस्मिन् काष्ठसिंहासने शताधिका पाषाणताम्रपित्तलादिधातूना देवमूर्तयः संस्थापिता वर्तन्ते । शङ्खघण्टादीनामपि राशयस्तत्र विराजन्ते । तत्र चैकस्मिन् दीपाधारे वाहमये घृतदीपक एकोऽहर्निशं निरन्तर प्रज्वलन् सन्तिष्ठते । गुग्गुलधूपादीनां धूमघोरणीभिस्तत्रत्यं वातावरण सदा सर्वदा धूमिलं गन्धपूरितं च भवति । तद्गृहप्राङ्गणे प्रायेण भिल्लादीनां कर्षकग्रामीणानां समूहाः सदैवोपतिष्ठन्ते । काकामहाशयस्तेभ्यः समनोविज्ञान बहुमानपुरस्सरं व्यवहारवर्तन माधुर्येण प्रकुरुते । स एष काकाकृष्णलालमहाशय स्वयमहिफेनसेवन व्यसनितया प्रतिदिनमेकान्ते कुर्वाणोऽपि च लोकान् प्रति स्वात्मानम् निर्व्यसनमिवोद्घोषयति, सुराधूम्रपानादिव्यसनग्रस्ताञ्जनान् ग्रामीणानाक्षिपति सदुपदिशति च । यतस्तन्निवाससमीपवर्तिषु सकलेषु ग्रामेषु स एकमात्रमेव ब्राह्मणोऽस्ति ततो गृहस्थाना जन्ममृत्युविवाहादिषु सर्वेष्वपि च शुभाशुभप्रकरणेषु काकामहाशयस्योपस्थितिर्यत्र तत्र सर्वत्रैवावश्यकीति तत्कार्यक्षेत्र परिचयपरिधिश्चातिविस्तृते स्त । स कदाचिद्विवाहविधौ व्यापृतस्तिष्ठति, कदाचिच्छ्राद्धतर्पणादिकं कारयंस्तिष्ठति, कदाचिद्धोमयज्ञादिकमातन्वन् भवति, कदाचिच्च गंगोद्यापनाद्यिव्रतोत्सवेषु धर्मकृत्येषु कर्मव्यापृत सन्तिष्ठते । एवं स एष काकाकृष्णलालमहाशय स्वस्य वर्तुले स्वयंसिद्धो भूदेवो महापुरुष इव सर्वतो विख्यातोऽम्लिह्नो मणिरिव प्रकाशमानो विराजते ।

अथ काकाकृष्णलालमहाशयस्य दिनचर्याक्रमस्तावदतीव विचित्रोऽपि कर्मण्यपुरुषाणां स्वाभाविकोद्यम इवानवकाशो भवति । सोऽहिफेनसेवनव्यसनित्वान्नित्यमेव हि प्रत्यूषे शीघ्रमेव निद्रां त्यक्त्वा जागर्ति । शय्यां त्यक्त्वा ग्रामोपसीम्नि क्वचिज्जलाशयासन्नवर्तिन्यां भूमौ मलत्याग कृत्वा शौचविधिं निर्वर्तयति । गृहमागतः सततोऽहिफेनरससेवनं प्रकुरुते । कण्ठेऽहिफेनप्रभावजन्यां कटुतामपहर्तुम् स नित्यमेवाहिफेनरससेवनानन्तरं गुडशर्करादिमधुरपदार्थानुपसेवते । तत सन्ध्यापूजादिकं नित्यकर्म प्रातःकालीन झटिति परिसमाप्य स सूर्योदये स्वयष्टिकासहाय स्वगृहाद्बहिर्भ्रमणाय प्रतिष्ठते । मार्गे व्रजन्तं तमवलोक्य ग्रामीणाः श्रद्धाजडा लोकास्तमभिवन्दमानाः प्रणमन्ति । केचन त चायचषकपानायापि चावह्वयन्ति । स

च तदानीं यथावसरमित्थमुपदेशप्रवचनानि ब्रूते—"अयि सज्जनाः ! इदानीं मम समयाभावादवकाशो नास्ति । ग्रामान्तरेषु कार्यगौरवाज्जिगमिषुरस्मि । भवन्त एव हि चायचषकान् पायं पायं मोदन्ताम् । यूयं सर्वे सद्गृहस्थाः सन्तोऽपि किमिति सूर्योदयात्प्रागेव शय्यां त्यक्त्वा नोत्तिष्ठध्वे ? मन्ये, तस्मादेव भवन्तो निखिलमपि जीवनम् यावदवकाशाभावमनुभवन्तः क्लिश्यन्ति दीर्घसूत्राश्च यथासमयं स्वदिनचर्यामनुवर्तितुं न पारयन्ते ! नाहमिदानीं चायपानसदृशे फल्गुकर्मणि स्वकीयममूल्यं समयं क्षपयितुमुद्यतोऽस्मि ।" एवं वदन्नपि काकामहाशयो लोकैः साग्रहमनुरुद्धस्तत्प्रीतिपरवश इवोदारतां व्यवहारभावप्रवणतामिवात्मनः प्रख्यापयन् कृपापूर्वकं गृहस्थानामन्तर्गृहं प्रविश्य पञ्चवारं वा दशवारं वा स्वग्राम एव चायचषकपानं लीलया विधत्ते । ततः पुनर्ग्रामान्तरगमनायोपक्रमते । एवं यत्र यत्र स परिव्रजति तत्र तत्राजस्रं चायपानप्रकरणानि बोभूयन्ते प्रतिदिनम् । क्वचिद् दुग्धपानं, क्वचिदिक्षुरसास्वादनं, क्वचित्फलाहारं च समश्नन् काकाकृष्णलालमहाशयो मध्याह्नपर्यन्तम् ग्रामेषु पर्यटति । इत्थं स स्वकीय प्रातःकालीनम् पर्यटन संसाधयति । अस्मिन् पर्यटनप्रसङ्गे स गृहस्थानां तत्र मण्डले वसतां सर्वेषां जीवनप्रवृत्तिविषयकान् समाचारान्, शुभाशुभाः सूचनाश्च संगृह्णीते । स्वभावतो मुग्धभावा ग्रामीणास्तं काकामहाशयमात्मनो विपद्बन्धुं शुभचिन्तक सुहृदं सखायं परामर्शप्रदातारं च मन्यमानास्तं बह्वाद्रियन्ते । एवं विधैर्यातायातैः काकामहाशयः क्वचिद्गृहस्थेभ्यो देवपूजार्थमामन्त्रणं, क्वचिद्ब्राह्मणभोजनाय निमन्त्रणं क्वचिच्च रुग्णानां चिकित्सार्थमाह्वानं चानायासमेवाप्नोति । प्रातर्भ्रमणेऽस्मिन् स प्रचुरमन्नशाकपत्रफलादीनि लभते । ततो गृहमागत्य स्वभवनालिन्दे भव्यं भद्रं कटासनं, तदुपरि व्याघ्रचर्मासनं, तदूर्ध्वमूर्णासनम् चास्तीर्य कानिचित् पुस्तकानि पञ्चाङ्गं च प्रसार्य सोपधानं ससुखं चोपविशति साडम्बरम् । मध्याह्ने ग्रामीणा जनास्तद्गृहमागत्य स्वगृहदशां मुहूर्तादिकं च परिपृच्छन्ति, स चात्मनः सर्वज्ञत्वविज्ञापनोचितां गम्भीरां मुद्रां कृत्वा नेत्रे निमील्य लोकातिशायि किमप्यदृष्टं निध्यायन्निव परिमिताक्षरैस्तात्त्विकैर्वाक्यैर्जनेभ्यः फलादेशं समुपदिशति । कस्मैचिद्ग्रहबाधानिवृत्तये भोजपत्रेषु यन्त्रादिकं विलिख्यार्पयति, कस्मैचिन्मानवानां पशूनां च पीडोपद्रवशांतये रक्षादोरकमभिमन्त्र्य प्रयच्छति, कस्मैचिदौषधगुटिकाः प्रददाति, कस्मैचित्प्रेतपीडापहाराय तन्त्राडम्बरमुपशिक्षयति । कस्मैचिद्वृक्षारोपणं, कस्मैचिन्नागसर्पादिपूजनं, कस्मैचिद्देवीभैरवहनूमत्सूर्यगणेशविष्णुप्रभृतीनामाराधनं चाप्युपदिशति । ज्योतिषलग्नफलादेशकादिपृच्छका लोकाः काकामहाशयाय रूप्यकमर्द्धरूप्यक पादरूप्यकं वा सर्वाभावेऽन्नफलमूलधान्यादिक वा प्रददति । काकामहाशयः स्वात्मनो निरपेक्षत्वमात्मसंतोष च प्रदर्शयितुमित्थं कृतकवचनोपन्यासपूर्वकं प्रवक्ति—"अये ! किमर्थं त्वमेतत् सर्वमत्रार्पयसि भोः ? एतत्तु त्वं स्वगृहनिर्विशेष मन्यस्वाश्रमस्थानम् । नास्त्येवात्र दक्षिणादेः समर्पणस्य कापि तात्त्विकी बतावश्यकता ! यदि च भवतां श्रद्धैवास्ते तदा तदेतत्सर्वं देवालयं गत्वा परमेश्वरार्पणं क्रियताम् ! अहं तु जनताजनार्दनस्य सेवार्थमेवैतत्सर्वं निष्कामं सम्पादयामि । नास्त्येव मम भवद्भ्यः किमपि प्राप्तुमभिलाषः !" एवं वदन् काकामहोदयः स्वात्मनो निःस्पृहतामौदार्य्यं चाविष्करोति ।

"महाराज ! भवद्भ्यो वयं ग्रामीणा दीना हीनाः प्रजाजनाः किं वार्पयितुं समर्थाः ? तदेतत्तु

पत्र पुष्पं फलं तोयमिवाकिञ्चनानामस्माकं स्वेन सहानीतं तुच्छातितुच्छमपि श्रद्धयार्पितं साधारणं वस्तुमात्रमेव मत्वा स्वीक्रियताम् ।" इति विनयं प्रदर्शयन्तो ग्रामीणाः काकामहाशयाय धनं धान्यं दक्षिणादिकं च समर्प्य गच्छन्ति ।

अथ मध्याह्नोत्तरं काकामहाशयः पुनः कर्षकानां शस्य क्षेत्राणि व्रजति, तत्र च यद्यद्वस्तु भक्ष्यं भोज्यं पेयं वा शाकफलपत्ररसादिकं च ग्रामीणास्तस्मै प्रर्पयन्ति तत्सर्वं वस्त्राञ्चलपोट्टलिकायां बध्वा स्वस्कन्धमारोप्योपढौकमाण: स्वगृहमानयति । ततोऽपराह्णे स्वावासभवनमागत्य काकाकृष्णलालमहोदयः स्वयं पाकविधिना भोजनं परिपचति । प्रायेण प्रचुरघृताप्लुतं 'दाल-बाटीति' भोजनमाहारत्वेनोपकल्प्य भुङ्क्तेऽसौ काकामहाशय. । न केवलमेतावदेव, किन्तु साकमेव दाल-बाटीभोजनेन शाकपत्र गुडं फलरसं यावदुपलब्धं प्रचुरमात्रायामुपयोज्य सुस्निग्धं बलवर्धकं पौष्टिकं च सुस्वादु सानन्दं भुङ्क्ते । सायं पुनर्देवपूजाडम्बर विरच्य काकामहाशय. स्वकृत्येषु व्यापृतो भवति । समयेऽस्मिन् सः कौशेयगोमुख्यभ्यन्तरमावृत्य हस्तं मालां जपन् सन्तिष्ठते । ये हि ग्रामीणाजना काकामहाशयस्य भक्तोत्तमा प्रायेण प्रसादं भुञ्जन्ति ते तत्समर्थकास्तत्प्रचारकाः स्वयंसेवकास्तत्पृष्ठपोषकास्तदनुयायिनश्च सर्वे तद्गृहाङ्गणमुपविष्टास्तस्य सिद्धाचार्यत्वम् तन्माहात्म्यं तद्गौरवं यशः कीर्तिञ्च गुणगणान्वा सगौरवं मिथः प्रख्यापयन्तस्तस्याचकाशाभावं च समर्थयानाः सन्तिष्ठन्ते । अथ सायन्तनीं सन्ध्यां पूजां च परिसमाप्य काकामहाशयस्तत्र समागतैः प्रियजनैः रलिन्दे निषण्णो वार्तालापान् विधत्ते । काकामहाशयस्य प्रखरा वाक्-शक्तिस्तावत्सन्तत भाषणकलाचातुर्यं प्रसारयन्ती क्रियाशीला भवति । इत्थमनेन विधिना सः सर्वेषामपि ग्रामीणानाम् लोकानां जीवनप्रवृत्तीः सुखदुःखसमाचारान् सूचना मनोभावान् व्यवसायान् पुरुषार्थोद्योगान् पारस्परिकान् सम्बन्धांश्च संगृह्य सर्वाण्यपि च रहस्यानि जानानो मोदते । एवं नित्यमेव हि तत्र रात्र्याः प्रथमप्रहरपर्यन्तं किलैकमनामन्त्रित सभाधिवेशनं भवति । तस्यां ग्रामीणसभायां काकामहाशय एवान्धेषु काण एव चक्षुष्मानिव सर्वसम्मतः स्वयं सिद्धो भवति सभापतिस्तस्य च प्रवचनानि कर्तव्योपदेशाश्च प्रवर्तन्ते । ग्रामीणास्तं बृहस्पतिकल्पं विद्वांसं सम्भावयन्ति ।

अथ पुनरसौ काकामहाशयस्यापरोऽस्ति विशेषो यत् स ज्ञातिभ्यः सम्बन्धिजनेभ्यो नागरिकेभ्यः शिक्षितेभ्यो राज्यकर्मचारिभ्योऽपरज्यमानस्तिष्ठति । इत्थंविधैर्जनैः साकं न मनागपि सम्पर्कं कामयते काकामहोदय । स खलु प्राचीनां जीवनप्रणालीं सातिशयोक्ति श्लाघते तत्रैव नवीनं विज्ञानं, नव्यं समाजं, नूतनां शिक्षां, राजनीतिं, शासनपद्धतिमधुनातनीं समग्रामपि मानवजीवनसरणिं स नासाक्षिभ्रूसङ्कोचं परुषभाषणैरपशब्दैः कटूक्तिभिरालोचनाभिश्च निन्दति, विगर्हति, तिरस्करोत्यवगणयति च । तन्मते नास्तिकं हि युगमेतदधुनातनम् । स हि नेतॄन् दस्युप्रायान्मन्यते, शासनं च दुःशासनं प्रमाणयति । राज्यस्याधिकारिभिः सह सम्भाषणमप्यापज्जनकं मन्यते । स केवलं कर्षकान्, श्रमजीविनो, व्यापारिण एव सबहुमानम् समर्थयते । स खलु शिक्षिताञ्जनानिदानीन्तनान् महामूर्खान् फैशनान्धान् स्वार्थपरायणांल्लुण्टाकांश्च भावयति । तद्धारणायां केचन संस्कृतज्ञा जना एव मनुष्यत्वेऽन्यापेक्षया मनागवरतरा भवितुमर्हन्ति । स हि स्वराज्यात्पूर्वतनस्य व्यतीतयुगस्य, व्यतीतस्य शासनस्य, तत्कालीनस्य रूढीचतुरस्य समाजस्य च भूयो भूयो गुणगणान्

गायं गायं वर्तमानाज्जगतो विद्रोहमिव कर्तुं परोक्षरीत्या प्रेरयति लोकान् सर्वान् । स हि वर्गयुद्धमेव क्रान्तिमनुमोदते । अधुनातननानाचारविचारान् स व्यर्थतोऽप्यधिकं मिथ्या मन्यते । तन्मते यन्त्रवादविकाशः प्रलयसाधनं, नवविज्ञानं च सर्वनाशकं कृतान्तदंष्ट्राकरालं प्रसिद्ध्यतः।

अथैकदा वयं शीतर्तौ ग्रामान्तरेष्वटन्त प्रसङ्गोपात्तं सम्पर्कमासादयाम तत्साक्षात्कारं चाकरवाम । काकामहाशयस्य ग्रामसविधे किलैकं शिवालयतीर्थं नद्यास्तटे वर्तते । तत्रास्माभिरेकादशदिनपर्यन्तं शिवाराधनानुष्ठानप्रसङ्गे काकामहोदयैः सह संवासो विहितः । यजमानो वणिग् दश ब्राह्मणाः सेवका भृत्यादयस्तु पूर्वतो विद्यमाना आसन् परन्तु लघुरुद्रकृत्यं सम्पादयितुमेकादशसंख्यका ब्राह्मणा अपेक्ष्यन्त । तत्रैकादशो ब्राह्मणोऽस्माभिः काकामहाशयो वृतो यजमानस्य वचनानुरोधात् । तत्रैकादशदिवसान् यावत् सहनिवासाद्वयं काकामहोदयस्य विचित्रं चरित्रं, तस्य दम्भलीलाडम्बरं च प्रत्यक्षमन्वभूम । तथाहि—

काकामहोदयो नित्यमेव हि ब्राह्मे मुहूर्ते सर्वेभ्यो ब्राह्मणेभ्यः पूर्वं शय्यां त्यक्त्वोत्तिष्ठते स्म । स हि जागरणसमकालमेव शौचस्नानादिविधीन् निर्वर्तितुं नदीतटं गच्छति स्म । तत्परिचितेभ्यः प्रतिस्पर्धिभ्यो ग्रामकण्टकेभ्यो विप्रेभ्यस्तस्य बाह्याडम्बरदम्भलीलाविलसितानि वयं तदाशृणवाम, ततस्तद्विषये किमपि सावधानं गूढभावेन ज्ञातुं परीक्षितुं च मतिमकरवाम । तत प्रच्छन्नभावेन तमनुसरद्भिरस्माभिस्तद्विषयकानि कानिचिद्रहस्यमयानि तथ्यानि विज्ञातानि—

नित्यमुषसि काकामहोदयः शय्यात. समुत्थाय नदीतटं गत्वा मलत्यागं कृत्वा दन्तधावनं मुखमार्जनं हस्तपादप्रक्षालनं च विधाय शिवालयमागच्छत् । ततस्तत्रागत्य कङ्कतिकया स्वपञ्चकेशीं व्यवस्थितां कृत्वा जलमिश्रितेन तैलेन जटाजूटग्रन्थि शिखां श्मश्रूणि चिकुरांश्च समसाधयत् । ततो भस्मना सर्वाणि पञ्चपात्राणि प्रक्षाल्य जलेन शुद्धतामनयत् । तत. सर्वतोभद्रं भव्यमासनमास्तीर्य तदुपरि न्यषीदत् । सन्ध्योपासनाडम्बरं विरच्य क्षणादेव नित्यकर्म समापयत् । ततः स्वस्य गोमुखीतोऽहिफेनगुटिकां स्वकञ्चुकान्निस्सार्य छुरिकया तच्चूर्णीकृत्य पात्रे क्रमशो जलबिन्दुसेकेन निर्गाल्येतस्य नो दृश्यात् कृत्वा निभृतं तमहिफेनरसं पपौ । ततोऽहिफेनस्य रसास्य कटुतां निवारयितुं काश्चन शर्कराद्राक्षादिमधुरपदार्थानभक्षयत् । तदनु महत्याडम्बरपूर्णया दम्भलीलया स्वासनासीनो दर्पणं स्वसम्मुखे निधाय ललाटे तिलकरचनामकार्षीत् । भस्माभावे स चूल्लीभस्म वा भित्तिलिप्तां सुधां वा कराङ्गुलिभिः सम्प्रोञ्छ्य भालपट्टे भुजयोः कूर्परयोः करप्रकोष्ठयोर्हृदये कण्ठे चोदरे च सर्वत्र देहे रेखात्रितयं लिलेप । केशररक्तचन्दनादिभिर्यत्र तत्र मंगलचिह्नानि व्यधात् । ततो देवमूर्तिमेकां धातुमयीं चन्दनाक्षतपत्रपुष्पैरपूजयत् । घृतदीपं प्रज्वाल्य धूपवर्तिकाः समज्वालयत् । स्वासनं परितश्चेतस्ततः पुष्पाक्षतान् व्यकिरत् । तदनन्तरं क्षणमेकं मालां हस्ते गृहीत्वा जापविधिमनाटयत् । अस्पष्टाक्षरोच्चारं मन्दं मन्दं स्तोत्रपाठपारायणं चाकरोत् । ततः स निवृत्तनित्यकर्मक्रियाकलाप इव क्षणं मौनमास्थाय स्वस्थचित्तमिवात्मानमनुभवन्न्यषीदत् । यावत् स इत्थमाचरति तावत् सूर्योदयस्य समय आसन्नो बभूव । तावति समयान्तरे भक्षितस्याहिफेनरसस्य मदप्रभावस्तन्मस्तिष्के मादकता प्रसर्पणलीलामकरोत् । मदप्रभावात्तस्य हृदये महानेवोत्साहवेगस्तस्य च तरलतरङ्गास्तच्चेतनामाक्रमन्त । ततः स भावोद्रेकवशानुगः संगीतप्रधानेन मन्द्रस्वरेण प्रातः-

स्मरणश्लोकान् हरिस्मरणपद्यानि च जगौ। स्वचित्तवृत्तीनामतिशयचाञ्चल्यात् स कथाचिद-ज्ञातप्रेरणया प्रेरित इव सहसा स्वासनादुत्थायेत-स्ततो बभ्राम। ततस्तेन भोजशालाया अन्तः प्रकोष्ठ प्रविश्य स्वयमेव हि चूल्यामग्निः सन्धु-क्षितः। चूल्योपर्युष्णजलं विधातुं पात्र निधाय चायचषकसाधनायोपक्रमं कर्तुं सयत्नो बभूव। भृत्यैर्यजमानस्य गृहादानीत दुग्धं परिताप्य कवुष्ण कृत्वार्द्धप्राय स्वयमेव शर्करामिश्रितं पपौ। इत्थं स्वदेहपूजां कृत्वा स सेवकान् कार्यकरान् समा-ह्वरन्। ततो धर्मशालायाम् शिवालयासन्नवर्तिन्यां गत्वा तस्याः प्रकोष्ठेषु शयानान् स्वसहयोगिनो द्विजान् सर्वान् जागरयितुं घनगम्भीरेण स्वरेण स्वस्योद्योगशीलतां कर्मठत्व यमनियमपरायणतां च प्रदर्शयन्निव व्याजस्तुतिपूर्णया वाचा प्रोच्चै-र्जगाद—

"अयि भोः भूदेवा! सूर्योदयसमयो हीदानी-मासन्नप्रायोऽस्ति! भवन्तोऽत्र भवन्तोऽधुनापर्यन्तं शय्यात्यागमकृत्वैव शयानाः सन्ति भो! उत्ति-ष्ठन्ताम् महाभागाः! सन्ध्यासमयोऽयमतिवर्तते! अस्माभिस्तु ब्राह्मे मुहूर्ते समुत्थायेदानीं यावत् शौचस्नानसन्ध्यादिकं निखिलमपि च नित्यकर्म-निवृत्तम्! इदानी भवतां कृते चायचषकपानाया-स्माभिः सर्वेऽपि च प्रारम्भिका उपक्रमाः सपरि-श्रममायोजिता सन्ति! किमिति नोत्तिष्ठन्ते भवन्त? उत्तिष्ठन्ताम्! उत्तिष्ठन्ताम्!! भोः उत्तिष्ठन्ताम् महाशयाः!!! त्वर्यताम्! त्वर्यताम्!! स्वर्णकल्पः प्रभातसमयोऽस्त्येति किल!!!"

एव गर्जन्-गर्जन् भूयो भूयः सम्बोधयन् सर्वान् ब्राह्मणान् काकामहोदयः स्वात्मन. स्वय-सिद्धतां, ब्राह्मणानां चालस्यप्रमाददीर्घसूत्रतादि-दोषानुद्घाटयामास। ब्राह्मणाश्च सर्वे तदुक्तानि वचनानि श्रावं श्रावं शय्यात्यागस्योपक्रममकुर्वन्। यथा यथा ब्राह्मणा उत्थाय नित्यविधीन् सम्पा-दयितुं धर्मशालायाः प्रकोष्ठान्तिकमुपगच्छन्ति तथा तथा काकामहाशयः स्वतत्त्वावधाने संसाधितं चायचषकम् तेभ्यः पाययति। प्रत्येकं ब्राह्मणोऽथ चायचषकम् पायं पाय नदीतीर गन्तुं त्वरयोपक्रमते, काकामहोदयस्य स्फूर्तिमत्त्वं कर्मठत्वमुद्योगशीलत्व सेवाभावमास्तिक्यं च श्लाघते, तत्प्रभावं च मन्यमानः स्वमनसीषल्लज्जते च।

अथ काकामहोदयस्तत्र स्वाभिभावकान् ग्रामीणाञ्जनान् स्वसेवकान् शिष्यांश्चोपदिश्य ब्राह्मणानां कृते किलेक्षुरस समानाय्य तान् पाययति, कदाचिच्छाकपत्रादिकं, कदाचिद्दुग्ध, दधि, तक्र-तिलमोदकान् बदरीफलादिकं च ग्रामीणसदस्यैरा-नाय्य द्विजेभ्यः समर्पयति। कदाचित सान्ध्यवायु-सेवनाय पर्यटनक्रमे स्थानीयानि तीर्थस्थानानि प्राकृतिकानि सौन्दर्यरमणीयानि रुचिराणि स्थला-न्यवलोकयितुमुत्प्रेरयति। एवं ब्राह्मणजनानुपा-सानोऽपि च काकामहाशय स्वस्य पाखण्डदम्भ-लीला विस्तारयन्मोमुद्यतेतमाम्।

अन्ते तल्लघुरुद्रानुष्ठानात्मकं कर्म परिसमाप्य वयं स्थानात्तस्मान्निवर्तमानाः पथि व्रजन्तः काका-महोदयस्य चारुचरित्रचर्याविषयचर्चां कुर्वाणास्त-द्दम्भलीलाविलसितं सरहस्यं तत्त्वतो ज्ञातुं प्राभ-वाम। मध्येवार्तालापमस्मास्वेकेनोक्तम्—

"पाखण्डः पूज्यते लोके" इति।

---

# भुंजन्ति धूर्ताः कृपणस्य वित्तम्

कवि वैद्य–रामस्वरूप शास्त्री, सम्पादकः' बालसंस्कृतम्' बम्बई–६६

क्षेत्रेषु- वाटीषु वनेषु नित्यं लतासु वृक्षेषु महौषधीषु ।
मधूनि पुष्पेषु समाहरन्तीं विलोकयामो मधुमक्षिके त्वाम् ।।१।।
प्रातश्च सायं दिवसस्य मध्ये अनातपे वाऽपि परातपे वा ।
सर्वेषु कालेषु प्रयत्नशीलां विलोकयामो मधुमक्षिके त्वाम् ।।२।।
सदैव कार्येषु समाकुला त्वं करोषि यत्नेन सदा मधूनि ।
पुष्पेभ्य आनीय चषालकेषु विलोकयामो मधुमक्षिके त्वाम् ।।३।।
पूर्वाह्ण - मध्यान्ह पराह्णकाले दिनेषु मासेषु च वत्सरेषु ।
ग्रीष्मे च वर्षासु हिमे वसन्ते विलोकयामो मधुमक्षिके त्वाम् ।।४।।
आम्रेषु नीपेषु च केतकेषु वन्यासु वल्लीष्वतिमुक्तिकासु ।
मधूनि पुष्पेषु समाहरन्तीं विलोकयामो मधुमक्षिके त्वाम् ।।५।।
जपासु जातीषु च मालतीषु मन्दार - पुन्नाग - शिरीषकेषु ।
मधूनि पुष्पेषु समाहरन्तीं विलोकयामो मधुमक्षिके त्वाम् ।।६।।
निद्रां परित्यज्य यदा प्रबुद्धा गीतानि गायन्ति खगाः प्रसन्नाः ।
उषासु तत्रापि परिभ्रमन्तीं विलोकयामो मधुमक्षिके त्वाम् ।।७।।
गावः प्रचाराय न यान्ति यावत् पुष्पाणि यावन्न दलन्ति प्रातः ।
त्वमीक्षमाणा लभसे मधूनि विलोकयामो मधुमक्षिके त्वाम् ।।८।।
कार्ये सुदक्षाऽसि सुकर्मठासि मन्दस्य लोकस्य निदर्शनासि ।
मधूनि चेतुं विपिने चरन्तीं विलोकयामो मधुमक्षिके त्वाम् ।।९।।
जानासि योग्योकरणे प्रयुक्तीस्त्वं वेत्सि नम्रीकरणे समृद्धीः ।
मधूनि चेतुं विपिने चरन्तीं विलोकयामो मधुमक्षिके त्वाम् ।।१०।।
परागलाभाय न यासि कं कं वृक्षं लतां वाऽपि न यासि कां काम् ।
हठात्पिबन्तीं मधु कुड्मलेषु विलोकयामो मधुमक्षिके त्वाम् ।।११।।
करीरकुंजेषु सकण्टकेषु निर्गन्धपुष्पेषु च किंशुकेषु ।
निम्बेषु कोलेषु च बर्बरेषु विलोकयामो मधुमक्षिके त्वाम् ।।१२।।
फलन्ति यत्ना इह तावकीना आयान्ति विघ्ना मधुहारकेभ्यः ।
भागस्य दोषो न तवास्ति दोषः पुण्यैकलभ्यानि फलानि वा स्युः ।।१३।।
मधूनि ते स्वात्यसुखार्जितानि व्रातानि यत्नेन चषालकेषु ।
हा हन्त लुण्ठन्ति वनेषु भिल्लाः भुञ्जन्ति धूर्ताः कृपणस्य वित्तम् ।।१४।।

——:०:——

(गताङ्कतोऽग्रे)

# मम संस्कृतोत्कर्षवृत्तांतः

श्री विश्वनाथ केशव छत्रे, जोगलेकरवाडा, सिद्धेश्वर आल, कल्याण (जि० ठाणे)

## ४४ संस्कृत नाट्यरचना

महात्मनः कवितायाः ध्वनिक्षेपणानंतरं 'बालानां जवाहरः' नाम्नी लघुतम नाटिका मया विरचिता प्रेषिता च नभोवाणीं प्रति। परं न सा स्वीकृता तया। ततः 'श्राद्धाश्नेन अंत्यजतर्पणम्' रचयित्वा मया प्रहितम्। नभोवाण्या तदपि न स्वीकृतम्। अथापि सा नाटिका भारतवाणीपत्रे ९-११-१९६१, २२-११-१९६१ दिनांकयोः प्रकाशिता। सेवानिवृत्तेः ऊर्ध्वं संस्कृतविश्वपरिषदः अंधेरि अधिवेशने (डिसे० १९६१) मोहमयीब्राह्मणसभया गीर्वाणभाषायां नाटितं 'सं. मृच्छकटिकम्' दृष्ट्वा, 'सं. सौभद्र'-स्य संस्कृतानुवादश्च रसिक-प्रियतां गतः इति श्रुत्वा, तं पठित्वा च 'सं. शारदा'-याः संस्कृतानुवादं कर्तुं तीव्रेच्छा मम मनसि समुदिता। परं शारदानुवादापेक्षया 'सं. स्वयंवर'-स्य अनुवादः सर्वतः यशस्वितरः भवितुं संभवति इति नूतनपरिचितेन, ब्राह्मणसभासंस्कृतनाट्यशाखानटेन श्रीराजाभाऊसाठे-महोदयेन स्वाभिप्रायः प्रकटितः। बालगंधर्वेन यौवनभरे नाटितं 'स्वयंवरम्' मया बहुवारं दृष्टम्। अतः तन्मे प्रियतमम् आसीत्। अतः सद्यः तस्यैव अनुवादकार्यं प्रारभ्य मया सार्धंकमासे तत् समाप्तमपि कृतं। संगीतकलापरिचयात् गीतानामपि अनुवादः विनायासं मया कृतः। ब्राह्मणसभानाट्यशाखासूत्रधारः श्री प्रभाकरपंतजोशीमहोदयः, ख्यातनामनटः श्रीदाजीभाटवडेकरमहोदयश्च इत्येतौ मया तथा विज्ञापितौ। तयोः सूचनानुसारं श्री साठेमहोदयेन मूलेन सह सः अनुवादः परीक्षितः। परं तस्य याथार्थ्ये प्रतीतेऽपि सः रंगमचं नाद्यापि प्रविष्टः, यथा गुणवत्यपि कन्या विवाहर्धेविम्। 'शारदायाः' अनुवादस्तु कृतः वा कारितः पंडितेतरेण नाटितश्च ब्राह्मणसभया १९६५ ख्रिस्ताब्दस्य अंते।

ततः मदिराव्यसनघोरपरिणामनिदर्शकं 'सं. विद्याहरणम्' नभोवाण्या स्वीकार्यं स्यात् सर्वकारनीतिम् अनुसृत्य इति विचार्य तस्य अंतिमः प्रवेशः मया अनूदितः नभोवाणी च तथा विज्ञापिता। कालेन तयाऽर्थितः सः अनुवादः मया भूरि परिश्रम्य, गु० श्री राजारामपंतकिजवडेकरशास्त्रिणां साहाय्येन शुद्धीकृतः प्रेषितश्च ध्वनिक्षेपितः द्विवारम् २४-११-६४ दिनांके मोहमयीकेंद्रात् ६-१२-६४ दिनांके च पुण्यपुरीकेंद्रात्, उत्तमरीत्या प्रदर्शितः ब्राह्मणसभानटनटीभिः। श्री दाजीभाटवडेकर – सुहासिनीमुलगांवकरयोःभाषणगायनादिनैपुण्येन सः यथा मम प्रीतयेऽभूत् तथा मम रसिकसुहृदामपि। वैयक्तिकसुखापेक्षया राष्ट्रसुखम् अधिकं मानयतः, धर्ममर्यादापालनार्थं च उपकारकर्त्र्या अपि देवयान्या याचितं स्वपाणिग्रहणं सांत्वपूर्वकम् अस्वीकुर्वत. कचदेवस्य चरितं मम विशेषप्रियं तिष्ठति चिराय। यदि ब्राह्मणसभा सं. विद्याहरणम् नाटकं संस्कृतभाषाद्वारा नाटयितुं इच्छेत्, संस्कृतानुवादं विद्याहरणस्य अंतिमः प्रवेशः च मत्तः अर्थयेत् सानंदं तं रचयिष्ये।

अश्वघोषेण 'बुद्धचरिते' कृतेन सिद्धार्थस्य वैराग्योदयस्य वर्णनेन प्रभावितः अहं 'सं. सिद्धार्थस्य गृहत्यागः' नाम अंकत्रयात्मकं स्वतंत्रं नाटकम् अरचयम्। तस्य अंतिमः गृहत्यागप्रवेशः इव आकर्षकः सन् रसिकप्रीतये निःसंशयं भवेत् इति मे दृढः विश्वासः। मायावती स्वप्नदर्शनात् अत्र

श्रूयमाणम् एतद् नाटक शृंगार-हास्य-करुणा-वात्सल्यादिरसैः पूर्णम् ।

अत्रांतरे 'अमृतलता'-त्रैमासिकीकृते प्रचलित-विषयम् नाम 'जवाहरस्वर्गारोहणम्' अधिकृत्य नाटिकां रचयितुं संकल्प्य मया चिंतनम् आरब्धम् । सर्वथा नवीनः अयं प्रयत्नः आसीत् । अतः द्वित्रि-दिनानि भिवंडीसेतुसमीपं नियतभ्रमणे, सृष्टिसौंदर्येण प्रसन्नस्य, शीतलसुखदवायुना प्रेरितस्य, श्रीशारदाम्बाशरणस्य च मम मनसि सर्वमपि प्रसंगपात्रसंभाषणादि सुसबद्धं चित्रम् आविर्भूतम्, नियुक्तसमयसुपूर्वमेव च नाटिकारचना दशदिनेषु समाप्य प्रेषितवानहं संपादकं प्रति । एषा नाटिका १४-११-१९६४ दिनाकस्य 'अमृतलता'-पत्रिकायां प्रकाशिता । ततः आगामि-मे-मासे जवाहरस्य प्रथमश्राद्धदिने सा नभोवाण्या कदाचित् उपयोजयितुं शक्या भवेदिति विचार्य मया प्रयतित पत्र-द्वारा । पर सा न मता स्वीकारार्हा !

### ४५ गु० श्री चिं० वा० मोनेद्वारा श्री मधुकर-रावाणा परिचय. नाट्यप्रदर्शयितृभावेन

अत्रांतरे कल्याणनिवासिन पूर्वोक्ताः गु० श्री चिं० वा०मोनेमहोदया पथि दृष्टा मया विज्ञापिताः अस्या नाटिकायाः विषये । तैः अवलोकनार्थं तन्मुद्रितम् अर्थितम् । तस्मिन् प्रेषिते, कालेन श्रुतं मया यद् ते भूतपूर्वविद्यार्थिसहकार्येण नभोवाणी द्वारा जवाहरनिर्याणदिने नाटिकां प्रदर्शयितुं प्रयत्नशीलाः इति । साभारं प्रत्यर्पिता सा कथं पुनः स्वीकार्या स्यात् इति प्रथमं शंकितोऽहम् । परं यदाहं तस्याः ध्वनिमुद्रणोचितसिद्धतावलोकनाय निमन्त्रितः तदा वृत्तसत्यत्व मे प्रतीतम् । संगीतेन सम्यग्युतां तां स्वीयां रचनां श्रुत्वा च विशेषेण प्रीतः अभवम् । सर्वेषु श्री करमरकरमहोदयानां संस्कृतभाषायाः उच्चारः शुद्धः स्पष्टः अर्थोचितस्वरयुक्तश्च इति अनुभूय सद्यः एव प्रशंसापरं स्वाभिप्रायं प्रकटितवानहम् । श्री मधुकर सदाशिव-फाटकनामा मध्यलोहमार्ग+-अधिकोष-लेखनिकः अस्याः नाटिकाया प्रदर्शयितृभावेन परिचितः युवा, उत्साहवान, संस्कृतनाट्यानुरागी, महत्वाकांक्षी च वर्तते । अस्या नाटिकायाः ध्वनिक्षेपणानंतरम् ( २३ तथा २५-५ १९६५ दिनांकयोः ) सत्वरं सः सुहृद्भि सह मां दृष्ट्वा 'नाट्यरूप मेघदूतम्' रचयितु मा प्रेरयामास । दिष्ट्या मत्संग्रहे डा० श्री खंडेविरचितः 'सुश्लोकमेघ' आसीत् । प्रदीर्घप्रस्तावनायुतः सः मया सूक्ष्मदृष्ट्या अधीतः मूलेन सह, अन्ये अनुवादाश्च अवलोकिता आसन् । अत प्रसंग-पात्र-विषये वारंवारं समित्रैः गृहमागतैः श्री मधुकररावैः सह चर्चां विधाय, विनायास शीघ्रमेव नाटिका रचना समये समाप्य तेभ्य. दत्ता स्वीकृता च नभोवाण्या । द्वित्रिवारम् अस्याःनाटिकायाः भाषणगानादि प्रत्यक्षीकृत्य मया यथोचितं शुद्धीकरणं सूचितम् । एषा च दि० ६-७-१९६५ रात्रौ ध्वनिक्षेपिता मम तथा रसिकमित्राणामपि मुदे अभूत् । एतयोः नाटिकयोः ध्वनिक्षेपणश्रवणेन अयम् अभिप्रायः मम हृदये आविरासीत्—

१३ सुरसनाट्यकृतिः कविनोज्ज्वल-
प्रतिभयाभिनवा प्रविरच्यते ।
फलति सा तु नटोत्तमनाटनाद्-
गुणवतीव सुयोग्यवरोद्वहात् ॥

### ४६ गु० श्री अप्पाराव भिडे रसिकत्वम्

परं सुरसा नाट्यकृतिः न शक्या निर्मातुं विनारसिकसाहाय्यात् । दिष्ट्या ईदृशः रसिकः समीपवासि श्री अप्पाराव भिडे महोदयरूपेण लब्धः मया नचिरात् सरसता—नीरसता—चर्चार्थं रचना-

+C Ry E, S, Co. Bank

समये । अतः नाटककारकविः, रसिकः, प्रदर्शयिता च इत्येषाम् अयम् अपूर्वः त्रिवेणीसंगम, एवं मया प्रीतेन सद्यः वर्णितः–

छत्रेवंशजकेशवस्य तनयः श्रीविश्वनाथः कविः।
अप्पारावभिडेऽभिधश्च रसिको लब्धक्षणः संनिधौ॥
नाट्याविष्कृतियत्नशीलयुवकाश्चितार्माणप्रेरिता ।१
काव्युल्लासकरस्त्रिवेणिसदृशोऽपूर्वस्त्वयं संगम ॥१४।

एवं रसिकोत्तमं लब्ध्वा मम प्रदीर्घकालीना मनोव्यथा अपगता। एते अप्पारावाः सेवानिवृत्तमुख्याध्यापका अतीतसप्ततिवर्षा सर्वव्यवहारनिवृत्ताः संति। एभिः बी. ए उपाधि-प्राप्तेः अनंतरं न कदापि संस्कृतम् अध्यापितम्। परमेतेषां मुखोद्गतश्लोकभांडारं, व्याकरणज्ञान, बहुश्रुतत्वं, विपुलसाहित्यावलोकनं, सूक्ष्मदृष्टि रसिकत्वं, विशेषेण च निरहंकारवृत्ति दृष्ट्वा नचिरात्तैः सह बद्धसौहार्देन मया काव्य-साहित्य-विनोद चर्चार्थं प्रत्यह तद्गेहं गंतुम् उपक्रांतम्। तेषां संगत्या मम साहित्यनिर्मितेः वेगः सरसत्वं, वैविध्यं च वृद्धिम् अवाप। विशेषेण उल्लेखनीयं तु 'प्रतापशाक्तयो', नाटिकाविरचनम् मम। तावत् सर्वथा अविदिता सा कथा तैः सादरं मह्यं कथिता। तेनाकृष्टः अहं दादरविभागस्थं मुं० मराठी-ग्रंथालयं मत्वा राणा-प्रतापचरितम् अवलोक्य टिप्पणी कृता। कल्याणम् आगत्य च सप्ताहे एव नाटिका विरचिता प्रेषिता च नभोवाणीं प्रति। परं ब्राह्मणसभायां तस्याः प्रदर्शने सुसिद्धायामपि नभोवाण्या अस्वीकार्या मता सा। जयपुरस्य 'भारती' संस्कृतपत्रिका, जयपुर-दिल्ली नभोवाण्यौ इत्येताः विज्ञापिताः अपि बद्धमौनत्वात् तस्मिन् विषये शून्यावराः प्रतीताः। ×'संविद्' पत्रिकया परम् एनां नाटिकां फेब्रु. ६६ अंके प्रकाश्य मम परिश्रमाः सफलतां नीताः। कीचकहननम्' नाम स्वतंत्रा नाटिका, श्री अप्पारावैः सह चर्चां विधाय मया विरचिता। सा २७-४-६६ दिनांके नभोवाण्या ध्वनिक्षेपिता। 'कीचकवध' नाम कै० खाडिलकरकृते मराठीनाटके विद्यमानेऽपि, मम तस्मिन्नेव विषये स्वतंत्ररचना यशस्वितां गता इति मम महत्त्वाकांक्षायाः सफलत्वम्। एते अप्पारावाः इदानीं प्रकृते अस्वास्थ्यात् न लभ्यंते चर्चार्थम्। अतः पुनः एकाकित्व गतोऽहम्। अंते मानवेन एकाकिनैव देहत्यागोत्तरं मार्गाक्रमणं कर्तव्यम् इति आत्मानं समाश्वास्य पूर्ववत् साहित्यनिर्माणे दत्तावधानो तिष्ठामि। श्री मधुकररावाः भूयः नवनवविषये स्वतंत्रनाट्यरचनां वा मराठीतः संस्कृतानुवादकरणे मां प्रेरयंति, ईदृशीं रचनां च नभोवाण्यां प्रदर्शयितुं प्रयतन्ते। एवं यशसा सह धनमपि मया लभ्यते, लेखनसाहित्य-(Stationery) प्रेषव्ययादि–(Postage) निर्वाहाय। मधुकररावैः चषकमात्रम्–अंशतः अनुवादरूपम् नंबिनोवर–प्रदानं च प्रदर्शिते १०-१०-६५, १४-७-६६ दिनांकयोः क्रमेण।

अथ श्री लालबहादुरशास्त्रिषु सहसा दिवंगतेषु मया श्रद्धांजलिकाव्यं विरचितं तेषां कृते, विज्ञापिताश्च अमृतलता संपादकाः श्रीश्रुतिशील-शर्ममहोदयाः। परं तैः मत्तः अर्थिता नाटिका तद्विषये। तदा कंचित्कालं किंकर्तव्यताविमूढेन मया चिंतितः स विषयः शांतमनसा। नचिरात् लब्धप्रकाशेन च श्रीशारदाकृपया मासद्वये विरचिता प्रेषिता च 'अन्वर्थको लालबहादुरोऽभूत्' नाम्नी अभीष्टनाटिका संपादकान् प्रति अधोलिखितश्लोकेन सह।

×. ग. श्री. चि. वा भोन।

×. भारतीय विद्याभवनम्-मोहमयी।

एतत्कलाकृतिनिर्माणकारणम्

"काव्यं नाभिलषामि शास्त्रविषये,
दृष्टा परं नाटिकां
प्राप्याकल्पितमित्यहो'ऽमृतलता'
संपादकात् प्रेरणाम् ।
वाग्देवीं शरणं गतो व्यरचय-
ल्लब्धप्रकाशः कवि-
रेतन्नाटयमहंकृतेरवसरस्तस्यात्र
नूनं कुत ?।।"

सा मे १९६६ अंके प्रकाशिता अंशतः ततश्च क्रमशः अंकद्वये समाप्तिं नीता । तस्यां समावेशयितुं समुचितानि चाणक्यसूत्राणि मया समये कुतोऽपि लब्धानि इति तस्याः नूनं मान्यम् ।

## ४७ संस्कृतनाटयस्पर्धाप्रेक्षणादि

महाराष्ट्रशासनेन प्रत्यब्दम् आयोज्यमाना संस्कृतनाटयस्पर्धा डिसेंबर १९६२तः नियमेन सादरं मया उपस्थाय प्रेक्ष्यते । नैकसंस्थाभिः प्रदर्शिताः विविधप्रयोगाः तथा प्रसंगमावस्य नैकसंस्थाभिः नाटनं, सस्कृतानुरागिणां, लेखकानां, परीक्षकाणां च नवपरिचयः वा पुनर्दर्शनं सुखसवादश्च इत्येते विशेषलाभाः अस्याः स्पर्धायाः प्रेक्षणेन । तत्र केचन मया चिरसंकल्पिताः नाटयप्रसंगाः साक्षात्कृताः । नूतनं प्रचलितविषयम् अधिकृत्य रचितं नाटयं दृष्ट्वा तादृग्–नवविषयप्रेरणां प्रत्यब्दं लब्धवान् अहम् । 'संस्कृत नाटयस्पर्धायां पारितोषिकविजिगीषूणां संस्थानां कृते काश्चित् सूचनाः' जाने० १९६५ स्पर्धाप्रेक्षणोत्तरं गुणावगुणप्रभावितेन मया लिखिताः, सादरं प्रकाशिताः भारतवाणीपत्रेण ३०-६-१९६५ दिनांके अमृतलता–त्रैमासिक्या च ऑगस्ट–नो०हें १९६५ प्रकाशने । विद्याहरणस्य अंतिमप्रवेशस्य पूर्वोक्तः मया कृतः संस्कृतानुवादः अभिनीत. जाने० १९६६ स्पर्धायां पं० श्री जांभोरकरैः, पर अयशस्वितां गतः भाषणस्य दृढपठनाभावात् । तैरेव जाने० ६७ स्पर्धायां अभिनीत 'चांद्रसेनीयम्' (Hamlet–मराठी भाषांतरकर्ता श्री० नाना । जोग–संस्कृतानुवादश्च मया कृतः ) द्वितीय पारितोषिकं शतद्वयरूप्यकाणां विजिगाय इति विशेषानंदकरम् । तत्रैव पूर्वोक्त–श्रीमधुकररावैः 'चषकमात्रम्' प्रदर्शितम् । पर पूर्वानुभवस्य अभावात्, स्पर्धायां प्रथममेव प्रवेशात्, दूरध्वनिक्षेपणयन्त्रस्य च दोषात् न तत् पारितोषिकार्हं मतम् । मम संस्कृतानुवादौ यथार्हौ प्रतीतौ इति प्रा० श्री शेवालकरैः–परीक्षणार्थं नियुक्तैः एकतमैः–– अनाहूतं मह्यं कथितम् इति मम स्फूर्तिप्रदम् अभूत् इति किं वक्तव्यम् । अस्या: स्पर्धायाः विषये मम अभिप्रायः प्रकाशितः भवितव्यम्–– पत्रेण ४-२-१९६७ दिनांके ।

## नटराजः प्रसन्नः

ऐषमः १९६७ खि०प्रारंभे आयोजितायां संस्कृतनाटयस्पर्धायां मधुकररावैः प्रदर्शितं 'शस्त्रग्रहणम्' द्विशतरूप्यकाणां (तृतीय) पारि-

तोषिकेण राज्यशासनेन गौरवितम् इति विशेषेण प्रशंसनीयम् । मूलनाटकम्-संन्यस्तखड्ग-कै० बै० स्वातंत्र्यवीर वि० दा० सावरकरविरचितम् प्रभावि-भाषा-परिप्लुतम् । अयं प्रसंगः हृदय-स्पर्शी वर्तमानकालोचितश्च । गृहीतसंन्यासः शाक्यसेनापतिः विक्रमसिंह प्रजामंडलेन प्रेषितात् दूतात्, आक्रामकशत्रुणा निघृणं क्रियमाणं निरा-गसां स्त्रीबालवृद्धानां हत्याकांडं-निशम्य, जाग-रितपौरुषः राष्ट्रस्य आवाहनम् आवृत्य, बुद्धदेवेन अननुज्ञातोऽपि राष्ट्ररक्षणार्थं चत्वारिंशद्वर्षाणि त्यक्तं शस्त्रं पुनः गृह्णाति इति कथाप्रसंगः 'आत्यंतिकायाः अहिंसायाः क्षत्रियेण कृतं अव-लम्बः राष्ट्रनाशाय कल्पते' इति चिरंतनं सत्यं प्रत्याययति प्रभाविरीत्या । अर्धोर्घस्य परं हृदय-स्पर्शिन प्रसंगस्य स्वीवरणं, श्री० रामकरमर-करावियोग्यनटानाम् आयोजनम्, नटै. भाषणस्य सुदृढं कण्ठस्थीकरणम्, वटवृक्षस्य नेपथ्यविशेष-विरचनम्, [illegible] दिग्दर्शनम्, मादृशाय नाटक-काराय नाट्यरसिकाय च प्रथमं प्रदर्शनम् । ततः कल्याणवासि-नाट्य-रसिक-वृंदाय विना-मूल्यं गायनसमाजसभागृहे, 'ईदृशः प्रयोगः प्रथममेव दृष्टः संस्कृतनाट्यरसिकैः कल्याणे इति लोकाः वदंति । तत्र लब्धैः अनाहूतप्रशंसोद्गारैः, सोत्साहं तदनंतरं प्रदर्शनं भारतविख्यातमराठी-संस्कृत-नटवर्याय श्री० दाजीभाटवडेकरमहोदयाय, तस्मात् प्रशंसा सूचनासहिता ततश्च स्पर्धायां, पुण्यपुर्यां प्रदर्शनम्, इत्येतादृशाः भगीरथप्रयत्नाः कारणं यशसः इति वक्तुं शक्यते ।

नटराजः प्रसन्नः २

पूर्वोक्तः ( ४५ परिच्छेदः द्रष्टव्यः ) श्री० रामकरमरकरमहोदयः अभिनयभाषणादि नैपुण्यार्थं प्रशस्तिपत्रेण संमानितः इति यथा अपेक्षितं स्थाने एव । गायनसमाजप्रयोगदर्शनेन परितुष्टा सौ० भावे M.A. गांधी विद्यालय शिक्षिका (अंबरनाथ) स्वविद्यालयस्य नचिरादभविष्यमाणे १०-३-१९६७ दिनांके स्नेहसमेलने विद्यार्थिवृंदेन एनमेव प्रयोगं प्रदर्शयितुम् उत्सुका भूत्वा हस्त-लिखितं मत्सकाशात् प्रार्थनापूर्वकं नीतवती इति यथा तस्याः संस्कृताभिरुचि रसिकत्वं च प्रत्याय-यति तथा यशस्वितामू अपि अस्य प्रयोगस्य । सिद्धेश्वर संस्कृत-पाठशाला-कल्याण-नाम संस्था-द्वारा 'शस्त्र१ग्रहणम्' स्पर्धायां प्रदर्शितम् आसीत् । अस्याः संस्थायाः संचालकः तथा मराठीतः संस्कृतानुवादकर्ता इति सबंधद्वयेन अशतः सह-भागी अयं जनः-लेखकः-प्रयोगयशसि इति नूनम् उत्साहवर्धनम् ।

४८ अध्ययनम्-अध्यापनम्-पुराणकथनम्

सवानिवृत्तेः अनंतरं विनाविलंबं बंगीय-संस्कृत-शिक्षा-परिषदः काव्यप्रथमापरीक्षाकृते नियुक्तग्रंथाभ्यासे, दत्तावधानः अभवम् । प्रतिमा-नाटकमेव नवम् अध्येतव्यम् आसीत् । रघु-कुमारादि-काव्यांशानां पुनः सूक्ष्मावलोकन कृतवान अहम् । एप्रिल १९६२ मासे भारतीय विद्याभवनद्वारा परीक्षाम् उपस्थितः अहं द्वितीय-श्रेण्याम् उत्तीर्णः अभवम् । अस्यां परीक्षायां भाषांतरविषयकगुणाः-मराठीतः गीर्वाणभाषायां तथा गीर्वाणभाषातः मराठीभाषायां-बहुशोन मया लब्धव्याः इति दृढाधारः मतः मया परीक्षा-यशःसंपादनस्य, प्रदीर्घकालीन-सतताभ्यासात् ।

---

१. मुंबई-नभोवाणी एतस्य ध्वनिक्षेपणं कर्तु-कामा इति ज्ञायते । मार्च १९६७ ।

( शेषाणामित्यग्रे )

# स्कन्दस्वामिनः कालः

श्री डा. मञ्जुलमयकपन्तुलः, वेदव्याकरणाध्यापकः, विश्वभारती, शान्तिनिकेतनम् .

स्कन्दस्वामिनः कालनिर्द्धारणे तच्छिष्यस्य शतपथब्राह्मणभाष्यकारस्य हरिस्वामिनः काल एव आधारः । हरिस्वामिनः कालनिर्णयाय यत् आधिकारिकं सूत्रं लभ्यते तदस्ति वाराणसेयसंस्कृतविश्वविद्यालयोपलभ्यमान, हरिस्वामिन. शतपथब्राह्मणभाष्यस्य हस्तलिपेरादौ प्रास्ताविकत्वेनोपन्यस्तम् अधोनिर्दिष्टं श्लोककदम्बकम्, यदाश्रित्य विभिन्नै विद्वद्भिः हरिस्वामिनः काल.उपपरीक्षितः, ततश्च स्कन्दस्वामिनोऽपि कालः अनुमित. ।

हरिस्वामिन प्रास्ताविकानि च पद्यानीमानि एव :—

### श्रीगणेशाय नमः

मातामहमहाशैलं, महस्तदपि तामहम् ।
अमातृ मातृकं वन्दे, यन्मत्तद्विरदाननम् ।।
अभिध्याय विवस्वन्त भगवन्तं त्रयीमयम् ।
श्रुत्यर्थविवृति वक्ष्ये प्रमाणपदनिश्चितम् ।।
याज्ञवल्क्यं मुनिं शश्वत्सिद्ध्यै कात्यायनं कुलगुरून् ।
प्रणिपत्य करिष्येऽहं व्याख्या शतपथश्रुतेः ।।
श्रूयते पक्षिलस्वामी प्रवक्ता पदवाक्ययोः ।
प्रसिद्धो जगतीपीठे मीमांसो यज्ञमानकृत् ।।
नागस्वामी तन्नप्ता श्रीगुहस्वामिनन्दनः ।
तत्र याजी प्रमाणज्ञ आढ्यो लक्ष्म्या समेधितः ।।
तन्नन्दनो हरिस्वामी प्रस्फुरद्वेदवेदिमान् ।
त्रयी व्याख्यानधौरेयोऽधीततन्त्रो गुरोर्मुखात् ।।
यः सम्राट् कृतवान् सप्तसोमसंस्थास्तथर्क्श्रुतिम् ।
व्याख्या कृत्वाऽध्यापयन्मां श्रीस्कन्दस्वाम्यस्ति मे गुरु. ।।
ततोऽधीततन्त्रो महातन्त्रो विश्वोपकृतिहेतवे
व्याचिख्यासुः श्रुतेरर्थं हरिस्वामी नतो गुरुम् ।।
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य क्षितीशितुः ।
धर्माध्यक्षो हरिस्वामी व्याख्यां कुर्वे यथामति[1] ।।

एवमेव सत्यव्रतसामश्रमिणा संपादिते सायणीये शतपथब्राह्मणभाष्ये, एकेषांचिदध्यायानामुपरि हरिस्वामिनोऽपि भाष्य दृश्यते । अन्ते च प्रत्यध्याय श्लोकाविमौ लभ्येते :—

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरि. ।
श्रुत्यर्थं पातयामास शक्तित. पौष्करीयक. ।।
यदाब्दीनां कलेर्जग्मुः सप्तत्रिंशच्छतानि वै ।
चत्वारिंशत्समाश्चान्याः तदा भाष्यमिदं कृतम् ।।

एतान्येव पद्यानि आश्रित्य अनेकै नैकमत्यपराणि मतानि उपस्थापितानि । ततश्च हरिस्वामिनः कालसम्बन्धे विद्वत्सु बहुविधा विप्रतिपत्तयः दृश्यन्ते ।

### विप्रतिपत्तयः

डा. लक्ष्मणस्वरूपेण हरिस्वामिनः ५३८तमः पश्चादीस्वीयः वत्सरकाल. अवधारित., ततश्च स्कन्दस्वामिनः ५००तम. पश्चादीस्वीयः वत्सरकालः विनिर्णिन्ये ।[2]

प्रा. भगवद्दत्तेन हरिस्वामिनः ६३८तमः पश्चादीस्वीयः वत्सरः ततश्च स्कन्दस्वामिनः ६३०तमः पश्चादीस्वीयः वत्सरकालः अवधारितः ।[3]

---

1 Dr. Mangal Deo Shastri—"The Date of Hariswamin" A.I.O.C., Patna, Dec. 1930.

2 Dr. L. Sarup—'Date of Skandaswamin" "Nirukta" chapters VII-XIII PP 54 to 78.

३ प्रा. भगवद्दत्तः—वैदिक वाङ्मय का इतिहास १म भाग, खं. २, पृ. ३ ।

डा कुन्हनराजेण साम्बशिवशास्त्रिणा च, हरिस्वामिन ६३९तम पश्चादीस्वीय वत्सर ततश्च स्कन्दस्वामिन ६००तम पश्चादीस्वीय काल कुन्हनराजेण, "क्रिस्त्वब्दीयषष्ठशतकोत्तरार्ध-जीवी" इति च साम्बशिवशास्त्रिणा ४अवधारित ।

डा मगलदेवशास्त्रिणा, हरिस्वामिन ६३९तम पश्चादीस्वीय काल अवधारित, विक्रम-पदाच्च पलर्केशिद्वितीयस्यापत्यम उत्तराधिकारी च विक्रमादित्य प्रथम सभावित ५ ।

सुब्बैयोपाध्येन डा वकटेन हरिस्वामिपद्य प्रमाणानर्ह स्वीकृत्य स्कन्दस्वामिन १०६०तम पश्चादीस्वीय काल आसन्नकालो वा अव-धारित ६ ।

काले इत्युपाध्येन डा सदाशिवलक्ष्मीधरेण हरिस्वामिन काल ५७तमेषु प्रागीस्वीयेषु वत्स-रष आसन्नवत्सरेष वा ७सभावित ।

## विप्रतिपत्तिहेतव विवेचन च

सत्यव्रतसामश्रमिणा सपादिते शतपथब्राह्मण-भाष्ये, उपलभ्यमानयो हरिस्वामिन प्रागुद्धृतयो "नागस्वामी" इत्यादि पद्ययो डा लक्ष्मण-स्वरूपेण सर्वस्मात स्कन्दस्वामिन कालनिर्णये साहाय्यमग्राहि । किन्तु प्रा भगवद्दत्त, "मयेक्षिते ८हरिस्वामिन शतपथब्राह्मणभाष्यस्य हस्तलेखे नोपलभ्येते एते पद्ये' इत्यभिधाय सकृत् एतयो प्रामाण्य नाङ्गीचकार ।

डा वकटोऽपि९ प्रा भगवद्दत्तमेव अनुसरन् उपयुक्तयो हरिस्वामिन पद्ययो प्रामाण्यमपा-स्तवान् । किन्तु किञ्चित्कालानन्तर, प्रा भगवद्-त्तेन यदा डा मङ्गलदेवशास्त्रिण साहाय्येन श्लोका-विमौ, हरिस्वामिन शतपथब्राह्मणभाष्यस्य हस्त-लेखे दृष्टौ तदा तयो १०प्रामाण्य स्वीकृतम् ।

डा मगलदेवशास्त्रिणा अपि एकस्मिञ्चित प्रबन्धे, हरिस्वामिन शतपथब्राह्मणभाष्यस्य हस्त-लेखात् ९मे श्लोका आहृत्य, हरिस्वामिन काल-निर्णयाय सहायकानामेतेषाम् प्रस्ताविकानाम् औप-सहारिकाणा च श्लोकाना विस्तरशो विवृति ११ कृता । एतस्मिश्च प्रबन्धे, हरिस्वामिन, ते अपि श्लोका हरिस्वामिकृतित्वेनोल्लिखिता सन्ति, ये सत्यव्रतसामश्रमिण सस्करणे प्रत्यध्यायम् अन्ते दृश्यन्ते । उपपरीक्षण सौकर्यार्थम्, आग्लभाषात अनूद्य, मगलदेवशास्त्रिण भाषायामेव तत्सदर्भः अधस्तात् दीयते ।

"लेखान्ते च शिष्टाशा एव सन्ति —

श्री आचार्यहरिहरस्वामिन कृतौ शतपथ-भाष्ये हविर्यज्ञेषु अष्टमोऽध्याय· समाप्त. । समाप्त-मिद काण्डम् ।

---

4 C K Raja — "Skanda, Udgitha and Maheshwar" A I O C Vol II Lahore 1930
साम्बशिवशास्त्रिण –ऋक्सहिता, प्रथम भाग पृ० २–५ ।

5 Dr Mangal Deo Shastri—"Date of Hariswamin" A I O C Patna, 1930

6 A V Subbaiah—J O R. Madras, 1936 PP 206-217

७ डा सदाशिव लक्ष्मीधर काते—"विक्रमादित्य के धर्माध्यक्ष" विक्रम स्मृति ग्रन्थ, २००१, पृ ३७५ ।

८ प्रा भगवद्दत्त—वैदिक वाङ्मय का इतिहास प्रे भा ख २, प्रारम्भ ।

9 Venkata Subbaih — J O R Madras, 1936, PP 206—217

१० प्रा भगवद्दत्त—वैदिक वाङ मय का इतिहास प्र भाग, खड–२, प्रारम्भ ।

11 Dr Mangal Deo Shastri — "Date of Hariswamin" A I O,C, Patna, Dec 1930

नागस्वामिसुतोऽवन्त्या पराशर्योऽवसन् हरिः
श्रुत्यर्थं पातयामास शक्तितः पौष्करीयकः ॥
यदाद्दीना कलेर्जग्मुः सप्तत्रिशच्छतानि वै ।
चत्वारिंशत्समाश्चान्याः तदा भाष्यमिदं कृतम् ॥

एतदन्ते च लेखकस्य शब्दाः एवं सन्तिः—

यदपि हृदयनिवेशात् लेखविश्रान्तिभावात् ।
नयनचलनसंगात् श्रोत्रशब्दावलम्बात् ॥
लिखितमकृतबुद्ध्या यन्मया पुस्तकेऽस्मिन् ।
करकृतमपराध क्षन्तुमर्हन्ति सन्तः ॥

तत् डा. मंगलदेवशास्त्रिणि एतयोः प्रामाणिकत्वं स्वीकुर्वंति, सत्यव्रतसामश्रमिणा संपादिते शतपथब्राह्मणभाष्ये, उपलभ्यमानयोः हरिस्वामिनः तयोरेव पद्ययोः प्रामाणिकत्वं सर्वथा उपपद्यते ।

डा. लक्ष्मणस्वरूपेण, ३२०२तीयात् प्राग्ीस्वीयवत्सरात् कलेः प्रारम्भसंभावना अवधार्य, किञ्चित्कालानन्तरं स्वयमेवास्वीकृतासीत् १२ ।" अतएव कलिवत्सरसम्बन्धात् तेन कृतः प्रमादः अत्र परित्यक्तव्य इति मत्वा हीयते । वस्तुतः कलेः प्रारम्भः ३१०२ तीयात् प्राग्ीस्वीयवत्सरात् १८म्या फलावलौ (18th February, 3102 B.c,) जात इति सर्वमतः सिद्धान्तः । अथ यथोपपादितं लक्ष्मणस्वरूपमहाशयेन यन्नासीत् कश्चनापि भूपतिः विक्रमोपाधि बिभ्राणः, यः किल ६३८–६३९तमेषु पश्चादीस्वीयेषु वत्सरेषु, मालवामधिशशास, तदतः हरिस्वामिपद्येषु कृतोदीरणा यत् भूपतिः विक्रमः मालवां ६३८–६३९तमेषु पश्चादीस्वीयेषु वत्सरेषु शशास इत्यस्ति प्रत्यक्षतः असिद्धा । अतः तेन "सप्तत्रिशत्शतानि वै" इत्येतावद्वाक्यं "षट्त्रिशत् शतानि वै" इत्येतावता संशोध्य, अवधारितं यत् हरिस्वामिनः भाष्यं ५३८–३९ पश्चादीस्वीयेषु वत्सरेषु व्यरचि यदा किल विक्रमादित्यः यशोधर्मन्निति मालव्यं शासनमलंकरोति स्म । तदतः हरिस्वामिगुरुः स्कन्दस्वामी ५००तमे पश्चादीस्वीये वत्सरे आसन्ने वा काले संबभूव ।

एवन्तर्हि पद्ये वर्त्तमानः "विक्रमस्य क्षितीशितुः" इतीयान् अंशः हर्षवर्द्धनभूपतेः" इत्येतावता संशोध्य यच्च सर्वथा १३संभाव्यते, एष निष्कर्षः प्रत्येतव्यः यत् हरिस्वामि स्कन्दस्वामिनौ यथासंख्यं ६३८–६३९ तमेषु पश्चादीस्वीयेषु वत्सरेष्वेव अभवतामिति । तथैव "विक्रमस्य क्षितीशितुः" उत "यदादीनां कलेर्जग्मुः सप्तत्रिशच्छतानि वै, चत्वारिंशत्समाश्चान्याः" प्रभृत्यंशाः "श्रीभोजराजस्य क्षितीशितुः" उत "यदाब्दानाम् एकचत्वारिंशत् शतानि वै, चत्वारिंशत् समा जग्मुः" इत्येताभ्यामंशाभ्यां संशोध्य, एष निष्कर्षः कथन्न प्रत्येतव्यः यत् स्कन्दहरिस्वामिनौ यथासंख्यं १०३८–१०३९ तमेषु पश्चादीस्वीयेषु वत्सरेषु १४सबभूवनुः । अमुनैव विधिना, प्रकृते पद्ये, यः कोऽपि नानारूपं बहुलं संशोध्य, स्कन्दहरिस्वामिनौ, पद्योद्धृतेस्वीयाब्देतरेषु अब्देषु वभूवतुः यदा मालव्यं शासनम् इतरेणैव केनचिदुपभुज्यत स्म, कथन्न आचक्षताम् ?

वस्तुतः कस्यापि प्राचीनग्रन्थगतस्य पाठसरणेः आत्ममतसंस्थापनार्थं, यथेच्छसशोधनं शोधसिद्धान्तानुमोदितं नास्ति । तदिदमेव वरमभविष्यद् यत् लक्ष्मणस्वरूपमहाभागाः श्लोकाविमाववसमर्थितौ अप्रत्ययार्हौ चेत्यभिधायैव समतुक्ष्यन् । तेषामिदं कथनं यदवन्तिनाथविशेषणं नान्यं कमपि विशिनष्टि ऋत यशोधर्मणः, कथमपि समीचीनं न

---

१२ सदाशिव लक्ष्मीधर कात्रे—विक्रमादित्य के धर्माध्यक्ष, विक्रम स्मृति-ग्रन्थ, २००१ ।

१३ तत्रानेहसि उज्जयिन्याम् श्रीमान् हर्षापराभिधः।
एकच्छत्रश्चक्रवर्त्ती विक्रमादित्य इत्यभूत् ॥
कल्हणस्य राजतरंगिणी, तृतीयः तरंगः ।

14 A. Venkat Subbaih—J.O.R. Madras, 1936, P. 202.

प्रतीयते । वस्तुत अवन्तिनाथविशेषणमेव यशोधर्मणि अव्याप्तिदोषमदिव प्रतीयते । यतो हि उज्जयिन्याः सुदूरवर्त्तिनोऽपि दशपुरादय प्रदेशा तदाधिपत्ये आसन् एव । हरिस्वामी च आश्रयदातारम् अवन्तिनाथपदेनैव केवल विशिनष्टि न च अन्येन केनापि इतरेण सभविना विशेषणेन । पुनश्च यशोधर्मण विक्रमादित्यस्वीकारे युक्तयोऽपि न प्रभवन्ति । यशोधर्मण अद्यावधिसमुपलब्धशिलालेखेषु, ५३२तमपश्चादीस्वीयवात्सरिक दशपुरीय (Mandasone) एव सर्वत्ररीयान् । एतस्मिश्च, सदर्पम्, आत्मानम्, आत्मपराक्रम, "ुत्साम्राज्य च विकत्थमानोऽपि, नासौ कुत्रापि विक्रमोपपदधारिणमात्मानमुल्लिखति । तथ्यत चदसौ विक्रमादित्य. अभविष्यत् तर्हि राजाधिराजपरमेश्वरादिविरुदैः सममेव विक्रमादित्योपपदमपि असशयमेवोदलिखिष्यत् । न च तथा१५ पश्याम ।

अपरत ६३६तम पश्चादीस्वीये वत्सरे मालवाया ध्रुवषण वालादित्यद्वितीयेन, एकेभ्यो ब्राह्मणेभ्य दीयमाना ग्रामा स्वयमेव प्रमाणानि यत् ६३६तम पश्चादीस्वीये वत्सरे, ध्रुवभट्टोपाख्यस्य ध्रुवषणबालादित्यद्वितीयस्यैव मालवाया १६ शासनमासीत् न चान्यतरस्य कस्यचित् । अतएव विक्रमपदेन सभाव्यमान यशोधर्मा कथमपि न सभाव्यते ।

डा. मङ्गलदेवशास्त्रिणापि विक्रमशब्दात् उद्भाव्यमानः हर्षो वा पुलकेशिद्वितीयपुत्रो विक्रमादित्यप्रथमो वा नैव सभाव्येते । हर्षस्य "सकलोत्तरापथनाथ" इति विशेषण, पुलकेशिद्वितीयस्य च "स्ववशललामभूतदक्षिणापथपृथिव्या स्वामी" इति च विशेषण विहाय, अल्पगौरवण, एकदेशीयेन "अवन्तिनाथ" इति विशेषणेन हरिस्वामिन. का न्वर्थं असत्स्यत् ?

सुब्बैयोपाख्यस्य वकटस्यापि इद कथन यत 'अथ च हि अक्रमपि योग्यानामेतेषा हरिस्वामि भाष्यहस्तलेखाधिगताना पद्यानामुपयोगितया स्कन्दस्वामिन कालनिर्णये । यथानिर्दिष्टमुपरितनाभ्या पद्याभ्याम्, आसीत् स्कन्दस्वामी, हरिस्वामिनो गुरुर्नत्र इतीदमपि सन्देहपदवीमवगाहते" कथमपि समीचीन नास्ति ।

प्रथमतस्तु, एतेषा विचारणा प्रा भगवद्दत्तस्य प्राक् १६२८ तमे वत्सरे कृतानुसन्धानसिद्धान्तमनुवर्त्तते यदा भगवद्दत्तेन हरिस्वामिन पद्यानि अप्रामाणिकानि अमन्यन्त । किन्तु भगवद्दतेनैव पुन १६३१तमे ईस्वीयाब्द हरिस्वामिन पद्याना १७प्रामाणिकत्व स्वीकृतम् उत हरिस्वाम्युक्तदिशैव हरिस्वामिन काल ६३८तम पश्चादीस्वीय वत्सर स्वीकृत । तत् वेकटसुब्बैयामहाशयस्यापि उपपत्ति छिन्न मूले नैव शाखाः न च पत्नमिव छिन्नमूलत्वात् स्वीकर्त्तुमयोग्या ।

द्वितीयत, पद्येषु पक्षिलस्वामिनोऽपि उल्लेखात्, पक्षिलस्य कालोपपरीक्षया हरिस्वामिन काले व्याघातो न दृश्यते । १८विद्वद्भि, अस्य च पक्षिलस्वामिन' कालः ४००तम पश्चादीस्वीयः वत्सरः स्वीक्रियते । यद्यपि हेमचन्द्रप्रणीताभिधानचिन्तामणिग्रन्थे अपि पक्षिल. कश्चन उल्लिखितो दृश्यते । एतदनुसरता च वात्स्यायनपक्षिलस्वामिचाणक्यप्रभृतिनाम्नाम् एकस्मिन्नेव पुरुषे अन्वय

---

१५ सदाशिव लक्ष्मीधर कात्रे — विक्रमादित्य क धर्माध्यक्ष वि. स्मृ ग्रन्थ, २००१, पृ०३७५

16 K K. Virjee — Ancient History of Saurashtra P. 72.

१७ प्रा भगवद्दत्त—'वैदिक वाङ्मय का इतिहास' विशेषविवरणार्थं द्रष्टव्य ।

18 Satisha Chandra Vidya Bhusana—History of Indian Logic

सङ्घटते किन्तु प्रोक्तप्रमाणाभावात् नैतत्सिद्धान्तत्वेनाङ्गीकर्तुं शक्यते। पक्षिलस्वामिन. सद्भावे तु विचिकित्सा नास्ति एव। हरिस्वामिना चोद्घुष्यमाणः पक्षिलस्वामी, १९वाचस्पतिमिश्रेण च न्यायवार्त्तिकतात्पर्यटीकाया पूर्वाचार्यत्वेन उद्दिश्यमाण, हरिस्वामिनो घोषणा प्रमाणयति।

तृतीयन्, हरिस्वामिन शतपथभाष्यमधीत्य, तद्गुरो स्कन्दस्वामिन भाष्यशैलीप्रभाव यतर कतरोऽपि अनायासमोक्षितु शक्नोति। ईदृशेनापि सूक्ष्मपरीक्षणेन, हरिस्वामिन आचार्यत्वेन, न हीयते स्कन्दस्वामी। तदत्र हरिस्वामिश्लोकानामप्रामाण्यकल्पनापि नैव औचित्यमासिपते। यच्च बेंकटसुब्बैयामहाशयै. उक्त "यत्प्रामाणिकत्व चैतयोरुभयोरपि उपन्यस्येन चेत् न तर्हि तदभिमत फलमावहति" तदपि अयुक्तमेव। प्रा भगवद्दत्तदिशैव, हरिस्वामिनः कालनिर्णयाय, 'वस्तुत., हरिस्वामिन स्वलेखादृते अन्यत् किमपि प्रत्ययार्ह २०प्रमाणमव नास्ति।"

अथ चेत् हरिस्वामिप्रोक्तदिशैव हरिस्वामिन काल ६३८तम पश्चादीस्वीय वत्सर स्वीक्रियेत, तर्हि पक्षिलस्वामिहरिस्वामिनोश्च मध्ये, अल्पीयसोऽप्यल्पीयस कालान्तर्यम् २३८ वत्सराणामिति यावदुपतिष्ठते। तथा च पाक्षिलस्वामिनः ४००तमपश्चादीस्वीये वत्सरे स्वीकृते, यथा विद्याभूषणोपाख्येन डा. सतीशचन्द्रेण स्वीकृतम्, पक्षिलगुहनागहरिप्रभृति चतुर्णामपि स्वामिनामायूंषि, सामान्यतः २१वर्षपञ्चकपरिमितान्येव अवधार्येरन् तर्हि हरिस्वामिन. भाष्यप्रारम्भकाल ६३८तम पश्चादीस्वीय वत्सर समापतति।

अतएव हरिस्वामिन ते पद्ये अप्रमाणार्हे अनर्थके वा न स्तः यतो हि 'महीयसः खलु प्रणेतुः हरिस्वामिन कालमाविष्कुरुत:" इति डा. मङ्गलदेव-शास्त्रिणा वचसा असन्धारणामुपलभ्यता २२सभजेते।

काले इत्युपाख्येन डा. लक्ष्मीधरेण, हरिस्वामिन पद्यस्य यः अन्वय कृतः स एष असम्भवदोषयुक्तत्वादग्राह्य एव। अस्य च सिद्धान्तमनुसरता, विक्रमसवत्प्रादुर्भावकाल एव हरिस्वामिकाल इत्यभिधास्यते। किन्तु न केवल हरिस्वामिन, अपितु तत्कालेन समसेव तद्गुरोः स्कन्दस्वामिनोऽपि कालः समाधेयोऽस्ति। तस्मात्, विक्रमसवत्प्रादुर्भावकाले आसीत् कश्चन भर्तृध्रुवोऽपि यस्य पितृत्व वा पुत्रत्व वा साद्य स्कन्दस्वामी हरिस्वामिनाभिसबध्येन इत्यपि प्रश्न युगपदेव पुरत पतति। लक्ष्मीधरमहाशयस्य चोपपत्तौ, कमपि एवम्विध स्वनामधन्य पुरुष न पश्याम, य किल स्कन्दपितृत्व वा पुत्रत्व वा पोषयेत्। स्वकीयामुपपत्ति स्वीकार-

---

१९ अथ भगवता अक्षपादेन, नि श्रेयसहेतौ शास्त्रे प्रणीते, व्युत्पादिते च भगवता पक्षिलस्वामिना, किमपरमवशिष्यते यदर्थ वार्त्तिकारम्भ इति।
न्यायवार्त्तिक तात्पर्य टीका। प्रारम्भ।

२० प्रा. भगवद्दत्त — वैदिक वाङ्मय का इतिहास।'

२१ पक्षिलस्वामी (४००तम' पश्चादीस्वीयो वत्सर)
।
गुहस्वामी
।
नागस्वामी
।
हरिस्वामी (६३८तम पश्चादीस्वीयो वत्सर भाष्यसमाप्तिकाल')

22 Dr. Mangal Deo Shasrtı → Date of Harıswamin" Proceedings and Transactions of All India Oriental Conference, Patna, 1930

यितु, भर्तृध्रुवपदस्यापि कापि विवेचना एतेन न पुरस्कृता। अपि चास्यामुपपत्तौ महानेकः अय दोषः यत् संवत्प्रवर्त्तकस्य विक्रमादित्यस्य समकालिकः हरिस्वामी, विक्रमादित्यवत्सरे वर्षगणना विहाय स्वकाल कलिवर्षगणनया ज्ञपयति। उपस्थित परित्यज्य अनुपस्थित याचमानस्य हरिस्वामिनो विस्मयकारिण्यामेतस्यां प्रक्रियायां को हेतु, इत्येतस्मिन्विषये उपरितनेन विदुषा लेशोऽपि रहस्योन्मेषः न क्रियते। डा लक्ष्मणस्वरूपस्य, पाठपरिवर्त्तनप्रवृत्ति विगर्हयत, स्वयं च सप्तशब्द त्रिंशत्शब्दात् पृथक्कृत्य आत्मानुमोदितमर्थमुपपादयतः, कथमेतत्समर्थितोऽर्थः व्युत्पत्तिप्रक्रिया च स्वीक्रियेत, अन्यश्च कथमुपेक्ष्येत, इत्यत्रापि विषये प्रत्ययपर कमपि हेतु नोपपादितवान्। तदसावपि तथैव तावदुपेक्ष्य, यावदेन समर्थयन्ती भूयिष्ठा शोधसामग्री नोपलभ्यते।

डा कुन्हनराजस्य, साम्बशिवशास्त्रिणश्च सिद्धान्तेन हरिस्वामिन कालः हरिस्वामिपद्यानुमोदित एव। अतस्तमभ्यामेव सममस्माभिरपि हरिस्वामिपद्यानां प्रामाण्य स्वीकृत्य, हरिस्वामिनः कालः ६३८तमः पश्चादीस्वीयः वत्सरः आसन्नकालो वेति स्थिरीक्रियते।

अथ "प्रस्फुरद्वेदवेदिमान्" इति पद्यांशे, प्रस्फुरदिति शत्रन्तेन पदेन अनुमातु शक्यते यत् शतपथभाष्यकर्त्ता हरिस्वामी भाष्यप्रणयनकाले अभिनवो युवा आसीत्। चेत् उभयोरपि गुरुशिष्ययोः अध्ययनाध्यापनयोः कालान्तर्य त्रिंशद्भिः वर्षैः व्यवधीयेत तर्हि स्कन्दस्वामिनः ६०८–६०९तमः पश्चादीस्वीयः वत्सरः कालः निरतिशय सिद्ध्यति।

# सम्पादकीय टिप्पण्यः

## नीतिपरिवर्तनम्

अधुना रूसदेशः पाकिस्तानं संहारकशस्त्रैः सज्जी करोति। कारणं किमपि भवतु परिणामस्तु स एव यत् सज्जीभूय भारतवर्षस्योपरि प्रबलमाक्रमणम्। केवलेनैतस्मादपि विश्वस्ते यद् युद्धे प्रवृत्ते सति भारतदेशः पाकिस्तानमुन्मूलयितुं समर्थो न भवेत्। अपि केवलं शत्रुत्वे यत् भारतवर्षस्य सैन्यशक्तिः विकुण्ठिता जायेत नोचेत् रूस-अमेरिकादिदेशा इव भारतवर्षोऽपि प्रबलशक्तिसम्पन्नो भविष्यति। अमेरिकादेशेन पटनेकाविविध्वंसकानि महाभयंकराणि शस्त्राणि प्रदत्तानि तदेवोद्देश्यं रूसदेशस्यापि विद्यते।

भवतु नाम किमपि कारणं परमस्माभिरेतन्मन्तव्यं यद् विना स्वार्थं कोऽपि कस्यापि मित्रं न भवति। अमेरिका, रूस, चीन, ब्रिटेनादिदेशास्तथान्ये ये महान्तो देशास्ते नाभिवाञ्छन्ति यद् भारतदेश शक्तिशाली भवेत् महोन्नतिशिखरं वा प्राप्नुयात्। सर्वे विजानन्ति यत् पाकिस्तानोऽत्युत्साहेन शस्त्रसज्जां करोति। सर्वेभ्यो देशेभ्य शस्त्राणां संग्रहणाय तस्य राष्ट्रधुरीणो भूमण्डले पर्यटन्ति तेषां केवलमेकमेवोद्देश्य यद् भारतवर्षेण सह युद्धम्—पूर्वं युद्धे विजिता हाजीपीरादिप्रदेशा रूसीयकर्णधाराणामादेशेनास्माभिः पाकिस्तानाय पुनः प्रत्यर्पिताः। किं नेदमासीदस्माकं मौर्ख्यम्। अधुना नीतिपरिवर्तनस्य पुनरपि सुवर्णीयावसरः समागतः। अस्मासु विपत्तिग्रस्तेषु प्राप्तेषु सत्सु स्वार्थं विहाय न कोऽपि साहाय्यमाचरिष्यति। अतः 'अनुग्रहम्' [illegible] कार्यम्। नोचेत् पुनरपि वयं दास्यपङ्के निमग्ना भविष्यामः।

—o—

